लक्षणावलि : of उदयनाचार्य -
edited with short notes and
published by पं. ज्येष्ठाराममुकुन्दजी
शर्मा at निर्णय सागर प्रेस..
मुम्बई, 1955 Vikram era.

(4)

3

1228

Bill No. 5/07-08
92-05-2008

श्री

# लक्षणावलिः

श्रीमदुदयनाचार्यविरचिता

टिप्पण्या संस्कृता पुस्तकान्तराभावा-
त्किञ्चिच्छोधिता

पण्डित ज्येष्ठाराम मुकुन्दजी शर्मणा

मोहमय्यां

" निर्णयसागर " मुद्रणयन्त्रालये मुद्रयित्वा
प्रकाशिता

शकाब्दाः १८२१—विक्रमाब्दाः १९५५

## अथ

उदयनाचार्यविरचिता

# लक्षणावलिः ।

**श्रीनृसिंहो विजयते ।**

**प्रणम्य[1] पार्वतीनाथं नित्यविज्ञानमीश्वरम्[2] ।**
**द्रव्यादिसर्वमेयानां करिष्ये[3] लक्षणावलिम् ॥ १ ॥**

**अभिधेयः[4] ( पदार्थः ) ।**

**( स द्विविधः[5] ) भावाभावभेदात्[6] ।**

---

१ प्रपूर्वकनमधातोः स्वापकर्षबोधानुकूलव्यापारोर्थः । स च मानसस्थले आत्ममनस्संयोगरूपः, वाचिकस्थले वाग्रूपः, कायिकस्थले क्रियारूप इति विशेषः । तदुत्तरल्यप उत्तरकालीनत्वमर्थः । तत्रोत्तरत्वे प्रतियोगितासम्बन्धेन प्रकृत्यर्थस्यान्वयः । तस्य चानुयोगितासम्बन्धेन प्रतिज्ञावाक्यगतकृञर्थेऽन्वयः । न च मत्तः देवदत्तादिरपकृष्ट इत्याकारकज्ञानस्य नित्यत्वेन देवदत्तादिनिष्ठव्यापारस्य तज्जनकत्वाभावेन धात्वार्थतावच्छेदकफलशालित्वाभावात्कर्मत्वानापत्तिः पार्वतीनाथस्येति वाच्यम् । धात्वर्थतावच्छेदकफलशालित्वेन कर्तुरिच्छाविषयस्यैव कर्मत्वमिति, अस्य तदिच्छाविषयत्वात् कर्मत्वसिद्धेः । न चैवं सति नमनानुद्देश्यस्यापि कर्मत्वापत्तिरिति वाच्यम् ।तथायुक्तमित्यनेनानुद्देश्यस्यापि विषादेरिव कर्मताया दुर्वारत्वात् । न च कर्तुरीप्सिततममिति व्यर्थम्, अनेनैव सर्वत्र कर्मत्वसिद्धेरिति वाच्यम् । ग्रामाय गन्तुं प्रवृत्तेपि ग्रामं गच्छतीति प्रयोगार्थत्वात् । तथा युक्तमित्यनेन तु न निर्वाहः । तत्क्रियायोगाभावात् । एवं ग्रामं न गच्छामि, राजाद्याज्ञया ग्रामं गत इत्याद्यर्थं तथा युक्तमित्यस्याप्यावश्यताबोध्येति दिक्.

२ ईशानः सर्वविद्यानामिति श्रुतेस्सर्वविद्येशितृत्वेन ग्रन्थादौ तन्नमनं युक्तमिति तदुक्तिः ।

३ शिष्याणामनायासज्ञानजन्यसुकृतस्यात्मगामित्वादात्मनेपदम् ।

४ तेनाभिधेयत्वं पदार्थसामान्यस्य लक्षणमिति सिद्धम् । अभिधा नामेदं पदमिममर्थं बोधयत्वितीच्छारूपा शक्तिः ।

५ द्वे विधे यस्य स द्विविधः, विधीयते व्यावर्त्यते इतरभेदकारकानुमितिविशेषीक्रियते अर्थोनयेति ( विधा ) व्यावर्तकधर्मः । विभाजकोपाधिरिति यावत् ।

६ एतेन भावाभावान्यतरत्वमपि लक्षणमिति सूचितम् ।

तत्र नञर्थ[1] विषयत्वरहितप्रत्ययविषयो ( भावः )।

(स च षोढा) द्रव्यादिभेदेन ।

तत्र ( अनित्यद्रव्यगुणकर्मसामान्यविशेषाः ) समवेताः ।

( नित्यद्रव्यसमवायाभावाः ) समवेतत्वरहिताः ।

( द्रव्यगुणकर्माणि ) समवेतवन्ति ।

( सामान्यविशेषसमवायाभावाः ) समवेतरहिताः ।

तत्र गुणा[2]त्यन्ताभावानधिकरणं ( द्रव्य[3]म् )।

[4]मूर्तत्वरहितसमवेतसमवेतत्वरहितमूर्तत्वरहितामूर्तत्वरहितसमवेतजातिमद्वा ।

गन्धासमवेतगगनारविन्दसमवेतजातिमद्वा ।

समवेतसमवेतसमवेतं वा ॥

( तच्च नवधा ) भिद्यते, पृथिव्यादिभेदेन।

तमो, द्रव्यं न भवति, आलोकनिरपेक्षचक्षुर्ग्राह्यत्वात्, आलोकाभाववत्। तमश्शब्दवाच्यत्वेन विप्रतिपत्तिविषयतया पक्षत्वम्, आलोकाभावशब्दवाच्यतया स-

---

१ नञर्थनिष्ठं यद् विषयत्वं नेति प्रतीतिसाक्षिभूतं विषयत्वं तद्रहितो यः प्रत्ययः अयं घट इत्यादिः प्रत्ययः तन्निष्ठविषयताश्रयत्वं घाटादाविति लक्षणसमन्वयः ।

२ गुणे गुणो नास्तीति प्रतीतिसाक्षिकोऽभावस्तदधिकरणत्वं गुणे, तदनधिकरणत्वं च घटादाविति लक्षणसमन्वयः ।

३ व्यावृत्तिर्व्यवहारो वा लक्षणस्य प्रयोजनम् । व्यावृत्तिश्चेतरभेदानुमितिः । पृथिवी इतरभिन्ना गन्धवत्वाद् यदि इतरभिन्ना न स्यात्तर्हि गन्धवत्यपि न स्याद् यथा जलादिकमिति । उत्पन्नविनष्टघटस्य गुणात्यन्ताभावाधिकरणत्वेन तत्र दोषो दुर्वार इति जातिघटितं लक्षणं कार्यम् ।

४ मूर्तत्वं च क्रियावत्त्वं, वेगवत्त्वं वा ।



म्प्रतिपत्तिविषयतया साध्ययोगित्वेन सपक्षत्वमिति न पक्षसपक्षयोरैक्यदोषः। तमश्शब्दो द्रव्यवाचको न भवति, आलोकशब्दान्यत्वे सति आलोकनिरपेक्षचक्षुर्ग्राह्यवाचित्वात्, आलोकाभावशब्दवत्[1]॥

तत्र गन्धात्यन्ताभावरहिता ( पृथिवी )।

करकासमवेतवाजिविषाणसमवेतजातिमती वा (१)

(सा द्विविधा) नित्यानित्यभेदात्।(नित्यः[2]) परमाणुः। (अनित्यं[3]) कार्यम्। पृथिवीत्वं, नित्यवृत्ति, घटपटवृत्तिजातित्वात्, सत्तावदिति तत्सिद्धिः। न च पक्षासिद्धिः। घटो, गगनवृत्तित्वरहितपटवृत्तिजातिमान्, घटपटव्यतिरेकित्वरहितत्वात्, पटवदिति पृथिवीत्वसिद्धिः। न च सत्ताऽसिद्धिः। गगनं, द्रव्यत्वेतरजातिमद्, भूतत्वाद्, घटवदित्यनुमानात् सत्तासिद्धिः। न च द्रव्यत्वासिद्धिः। गगनादि, रूपावृत्तिजातिमद्, गुणवत्त्वाद्, घटवदिति द्रव्यत्वसिद्धिः।

(कार्यं त्रिविधं) शरीरादिभेदेन। तत्र भोगा[4]यतनमन्त्यावयवि ( शरीरम् )। शरीरसंयुक्तमपरोक्षप्रतीतिसा-

---

१ न च तमोऽभावस्यैव तेजस्त्वमस्तु, न त्वालोकाभावस्तमः, विनिगमनाविरहादिति वाच्यम्। सर्वानुभूतोष्णस्पर्शाश्रयद्रव्यान्तरकल्पनापत्त्या गौरवं स्यादिति दिक्।

२ (नित्यत्वं) प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वम्। ३ ( अनित्यत्वं ) प्रागभावध्वंसान्यतरप्रतियोगित्वम्।

४ सुखदुःखसाक्षात्कारो भोगः। तस्यायतनमाश्रयः। एवं चावच्छेदकतासम्बन्धेन भोगाश्रयत्वं शरीरत्वमिति लक्षणं बोध्यम्।

धनमतीन्द्रियम्( इन्द्रियम् )। ज्ञानकरणजन्यत्वरहितज्ञानत्वम्(अपरोक्षत्वम्)। (अतीन्द्रियत्वं) नाम अज्ञातसाधनत्वम्। प्रतीयमानतया भोगसाधनं (विषयः)[1]।

॥ इति पृथिवीप्रकरणम् ॥

पृथिवीवृत्तित्वरहितहिमकरकावृत्तिजातिमद् ( जलम्) ।

तन्नित्यानित्यभेदाद्(द्विविधम्)। जलत्वं, नित्यवृत्ति, हिमकरकावृत्तिजातित्वात्, सत्तावदिति तत्सिद्धिः । करका, गगनवृत्तित्वरहितहिमवृत्तिजातिमती, स्नेहाधिकरणत्वात्, हिमवदिति करकायां तत्सिद्धिः।

(अनित्यं त्रिविधं) शरीरादिभेदेन।शरीरं वरुणलोके।जलपरमाणवः, पारम्पर्येण शरीरारम्भकाः, इन्द्रियारम्भकत्वात्, पार्थिवपरमाणुवत् । इन्द्रियारम्भकत्वं तु रसनस्याप्यत्वात् सिद्धम्। रसनम्, आप्यम्, रूपादिषु पञ्चसु मध्ये रसस्यैवाभिव्यञ्जकत्वात्, सक्तुरसाभिव्यञ्जकसलिलवदिति। रसनसिद्धिस्तु रसोपलब्धिः, करणसाध्या,अपरोक्षप्रतीतित्वाद्, रूपोपलब्धिवदिति। विषयस्तु सरित्समुद्रादिर्हिमकरकादिः । न च करकायाः काठिन्यात् पार्थिवत्वमाशङ्कनीयम्। अनन्तरमेव स्वभावापगमादिति ॥

---

[1] शरीरेन्द्रियभिन्नत्वे सति भोगसाधनत्वं विषयत्वमिति लक्षणं बोध्यम् ।

॥ इत्यप्प्रकरणम् ॥

रसात्यन्ताभावसमानाधिकरणरूपाधिकरणं(तेजः)।

करकावृत्तित्वरहितविद्युदाकरजवृत्तिजातिमद्वा । विद्युत्, तेजः करकावृत्तित्वरहिताकरजवृत्तिजातिमती वा, विद्युद्व्यतिरिक्ताकरजान्यत्वरहितत्वाद्, आकरजवत्। आकरजं सुवर्णादि ।

ननु सुवर्णादिकं, पार्थिवं, नैमित्तिकद्रवत्वाधिकरणत्वाद्, घृतवत्। अनेन पार्थिवत्वसिद्धावाकरजवृत्तिजातिमत्त्वसाधनेऽपि विद्युत्तेजसो न तैजसत्वसिद्धिरिति चेत्॥न। सुवर्णादिकम्, अपार्थिवम्, अत्यन्ताग्निसंयोगेप्यनुच्छिद्यमानद्रवत्वाधिकरणत्वादिति प्रत्यनुमानेनापार्थिवत्वसिद्धावसांसिद्धिकद्रवत्वेन तत्सिद्धिः । अन्यथा पार्थिवत्वे द्रवत्वमत्यन्ताग्निसंयोगे उच्छिद्येतेति तर्कोऽनुसरणीयः ।

(तच्च द्विविधं) नित्यमनित्यं चेति। तेजस्त्वं, नित्यवृत्ति, विद्युदाकरजवृत्तिजातित्वात्, सत्तावदिति नित्यत्वसिद्धिः। साधितं तेजस्त्वम् ।

(अनित्यं त्रिविधं) शरीरादिभेदेन । शरीरमादित्यलोके। तस्यापि पूर्ववत्सिद्धिः। इन्द्रियं रूपोपलम्भकं चक्षुः । रूपोपलब्धिः, करणसाध्या, क्रियात्वात्, छिदिक्रियावदिति तत्सिद्धिः । कर्तृप्रेर्यं करणम् । धातुवाच्या क्रिया। चक्षुः, तैजसम्, रूपादिषु पञ्चसु

मध्ये रूपस्यैवाभिव्यञ्जकत्वाद्, आलोकवत्। विषयस्तु भौमादि॥

॥ इति तेजःप्रकरणम्॥

रूपात्यन्ताभावाधिकरणस्पर्शाधिकरणो (वायुः)।

विप्रतिपन्नः स्पर्शः, रूपरहितद्रव्यवृत्तिः, स्पर्शत्वरहितशब्दान्यत्वरहितत्वात्, शब्दवदिति वायुसिद्धिः। (सच द्विविधः) नित्यानित्यभेदेन। वायुत्वं, नित्यवृत्तिनित्यवृत्तित्वरहितवायुत्वान्यत्वरहितत्वात्, पृथिवीत्व, वदिति तत्सिद्धिः। (कार्यं त्रिविधं) शरीरादिभेदेन। वायुत्वं, शरीरवृत्ति, बाह्येन्द्रियवृत्तिजातित्वात्, सत्तावदिति तत्सिद्धिः। स्पर्शोपलम्भकमिन्द्रियं, वायवीयं, रूपादिषु पञ्चसु मध्ये स्पर्शस्यैवाभिव्यञ्जकत्वाद्, व्यजनपवनवदिति। विषयस्तूपलभ्यमानस्पर्शाधिष्ठानभूतः। (प्राणस्तु) शरीरादिप्रेरणहेतुर्वायुः।

॥ इति वायुप्रकरणम्॥

शब्दात्यन्ताभावानधिकरणं (नभः)।

संयोगजन्यजन्यविशेषगुणसमानाधिकरणविशेषाधिकरणं वा।

शब्दः, क्वचिदाश्रितः, गुणत्वाद्, रूपवत्। न च शब्दः, अस्पर्शवदाश्रयः, स्पर्शासहकारित्वाद्, बुद्धि-

वदिति। न च कालाद्याश्रयः । बाह्येन्द्रियग्राह्यत्वाद्
रूपवदिति परिशेषात्तत्सिद्धिः ।

॥ इत्याकाशप्रकरणम् ॥

अनियतपरत्वासमवायिसमवायित्वरहितपरत्वासमवायिसमवायिमूर्तत्वरहितः ( कालः ) ।

गगनम्, अनियतपरत्वासमवायिसमवायित्वरहितमूर्तत्वरहितज्ञानसमवायित्वरहितत्वद्रव्यान्यत्, अमूर्तत्वाद्, आत्मवदिति तत्सिद्धिः ।

॥ इति कालप्रकरणम् ॥

अनियतपरत्वासमवायिसमवायिनी मूर्तत्वरहिता ( दिक् ) ।

कालः, विशेषगुणरहितो मूर्तद्रव्यान्यः, मूर्तत्वरहितत्वाद्, आकाशादिवदिति तत्सिद्धिः ।

॥ इति दिक्प्रकरणम् ॥

ज्ञानात्यन्ताभावरहितः ( आत्मा ) ।

परत्वासमवायिसमवायित्वरहितशब्दासमानाधिकरणकार्याश्रयो वा ।

ज्ञानं, क्वचिदाश्रितं, गुणत्वाद्, रूपवदिति तत्सिद्धिः ।
न च शरीरेन्द्रियाणां तदाश्रयत्वं । कार्यत्वाद् घटवदिति कार्यस्य तदाश्रयत्वे स्वर्गाद्यर्थितया ज्योति-

ष्टोमाद्युपदेशो न स्यात् । न च मनसस्तदाश्रयत्वम् । करणत्वात्, चक्षुर्वत् ।

(स द्विविधः) ईश्वरानीश्वरभेदात् । अङ्कुरादिकं, सकर्तृकं, कार्यत्वाद्[2], घटवदितीश्वरसिद्धिः । द्वितीयस्त्वहम्प्रत्ययवेद्यः । स च नाना । व्यवस्थावचनादिति ।

॥ इत्यात्मप्रकरणम् ॥

स्पर्शरहितत्वे सति मूर्तं ( मनः ) ।

विशेषगुणात्यन्ताभावाधिकरणत्वे सति मूर्तं वा ।

पृथिवीवृत्तिपृथिवीत्वरहितवृत्तिवृत्तित्वरहितगुणत्वव्याप्यजातिमान् (विशेषगुणः)।आत्मप्रतीतिः;करणसाध्या, अपरोक्षप्रतीतित्वाद्, रूपोपलब्धिवदिति तत्सिद्धिः ।

॥ इति मनःप्रकरणम् ।

॥ इति द्रव्यप्रकरणम् ॥

॥ अथ गुणपदार्थः ॥

संयोगाजन्यसंयोगासमवायिसमवेतत्वरहितसंयोगासंयोगसमवेतवान् ( गुणः ) ।

विभागाजन्यविभागासमवायिसमवेतत्वरहितविभागाविभागसमवेतवान्वा ।

---

१ पृथिवीत्वस्य पक्षतावच्छेदकत्वे सामानधिकरण्येन साध्यसिद्धेरुद्देश्यत्वे च सिद्धसाधनम् । अवच्छेदकावच्छेदेनोद्देश्यत्वे च परमाणौ बाध इति तत्परित्यागः ।

२ कार्यत्वं न स्वरूपसम्बन्धविशेषः पक्षवृत्तिकार्यात्मत्वस्य पक्षात्मक एव भिन्नतयाऽनुगमकरूपाभावेन च पक्षावृत्तित्वसाधारण्यापत्तेः । प्रागभावप्रतियोगिकार्यत्वमपि न हेतुः। प्रभावव्यक्तीनां भिन्नत्वेऽनुगमकरूपाभावेन चोक्तदोषापत्तेः । किं तु स्ववृत्तिमहाकालान्यत्वाकालिकत्वोभयसम्बन्धेन सत्तावत्त्वरूपः सर्वानुगतो हेतुरिति दिक् ।



रूपं, संयोगाजन्यसंयोगासमवायिसमवेतत्वरहितसंयोगसमवेतत्वरहितसंयोगसमवेतवद्, रूपत्वरहितसंयोगान्यत्वरहितत्वात्, संयोगवदिति गुणत्वसिद्धिः।

(चतुर्विंशतिप्रकारस्सः) रूपादिभेदेन।

॥ इति गुणप्रकरणम् ॥

---

रसासमवेतनीलपीतसमवेतवद्(रूपम्)।

गुणत्वे[1] सति चक्षुर्मात्रग्राह्यं[2] वा।

(तत्सप्तप्रकारं)शुक्लनीलादिभेदात्।

न च रूपग्राहकं चक्षुः, चक्षुर्मात्रग्राह्यं रूपमित्यन्योन्याश्रयत्वम्। नयनगोलकाधिष्ठानत्वेन चक्षुर्निरूपणात्। शुक्लः, रसासमवेतनीलसमवेतवान्, शुक्लत्वरहितनीलान्यत्वरहितत्वात्, नीलवदिति रूपत्वसिद्धिः। नीलं, स्वमात्रसमवेतवत्, स्वमात्रसमवेतत्वरहितनीलान्यत्वरहितत्वाद्, घटवदिति नीलत्वजातिसिद्धिः। नीलत्वरहितघटत्वात्यन्ताभावरहितः स्वशब्दार्थः।

---

गुणत्वे सति रसनग्राह्यः (रसः)। (स च षोढा) माधुर्यादिभेदेन। क्षीरेक्षुगुडसलिलेषु माधुर्यादिसाम्येऽप्यवान्तरजातिभेदस्य विद्यमानत्वाद् विशेषगुणत्वसिद्धिः।

---

१ येनेन्द्रियेणेति न्यायेन रूपत्वेतिव्याप्तिवारणायाद्यम्।

२ चक्षुरितरेन्द्रियाग्राह्यत्वं मात्रपदार्थः। तेन संख्यायां नातिव्याप्तिः। प्रभाघटसंयोगे परमाणुरूपे चातिव्याप्त्यव्याप्तिवारणं तु चक्षुरितरेन्द्रियाग्राह्या चक्षुरिन्द्रियग्राह्यात्वगितरेन्द्रियग्राह्या च या जातिः तत्त्वमिति तदर्थादिति दिक्।

गुणत्वे सति घ्राणग्राह्यः ( गन्धः ) । जलादावौपाधिकी गन्धप्रतीतिर्न स्वभावत इति विशेषगुणत्वसिद्धिः । जलं, न गन्धाधिकरणं, पाकजरूपानधिकरणत्वात्, तेजोवत् । वायोः पक्षतुल्यत्वान्न व्यभिचारः ।



गुणत्वे सति त्वगिन्द्रियग्राह्यः (स्पर्शः) । (स त्रिविधः) । शीतोष्णानुष्णाशीतभेदात् ।

नन्वनुष्णाशीतस्पर्शस्य कथं विशेषगुणत्वं तस्य पृथिवीवायुसाधारणत्वात् । पाकजत्वापाकजत्वाभ्यामवान्तरजातिभेदेन विशेषगुणत्वे नैमित्तिकद्रवत्वस्याप्यत्यन्ताग्निसंयोगेसत्युच्छेदानुच्छेदाभ्यामवान्तरजातिसद्भावेन विशेषगुणता स्यात् । ततश्च नैमित्तिकद्रवत्वस्य सामान्यगुणपाठो निरर्थकः स्यात् । अनुष्णाशीतस्पर्शस्य वा पाठः स्यात् । ततश्च वायोर्बाह्येन्द्रियग्राह्यविशेषगुणपाठो निरर्थकः स्यात् । सेयमुभयतस्पाशा रज्जुः ॥ मैवम् ॥ अवान्तरजातिभेदस्य क्षीरेक्षुगुडमाधुर्यादिवदनुभवसिद्धत्वात् । अन्यथा महान्धकारे स्पर्शोपलम्भमात्रेण वायुर्वातीति प्रत्ययो न स्यात् । न चैवं सति नैमित्तिकद्रवत्वस्यावान्तरजातिभेदानुभवः । वायुस्पर्शः, पृथिवीवृत्तित्वरहितगुणत्वव्याप्यजातिमान्, अपाकजस्पर्शत्वात्, तेजस्स्पर्शवदित्यनुमानात् ।



पृथक्त्वासमवेतसर्वान्योन्याभावसमानाधिकरणैक-



द्रव्यसमवेतवती (सङ्ख्या)। आदाविन्द्रियसन्निकर्षघटनादेकत्वसामान्यधीः। तत एकत्वोभयगोचरा मतिः। ततो द्वित्वम्। ततो जायते द्वित्वप्रमितिः। स्वतोपि परतो द्वित्वप्रमानन्तरं द्वे द्रव्ये इति धीः॥ इयं निगदिता द्वित्वोदयप्रक्रिया[1]॥

सङ्ख्यासमवेतत्वरहितसङ्ख्यासमवायिसमवेतवत् (परिमाणम्)।

॥ इति सङ्ख्याप्रकरणम्॥

शब्दासमवायिकारणसमवेतत्वरहितसर्वान्योन्याभावसमानाधिकरणसमवेतपरिमाणासमवायिसमवेतत्वरहिताधिकरणं (पृथक्त्वम्)।

विभागासमवेतत्वाभावाविरोधिसमवेतप्रध्वंसप्रतियोगित्वानधिकरणसमवेतत्वानधिकरणगुणत्वसाक्षाद्व्याप्यजात्यधिकरणं (संयोगः)।

विभागासमवेतसर्वान्योन्याभावसमानाधिकरणसमवेतशब्दासमवायिसमेतवान्वा।

संयोगासमवेतसर्वान्योन्याभावसमानाधिकरणसमवेतशब्दासमवायिसमवेतवान् (विभागः)।

---

१ अयमेकोयमेक इत्येकत्वद्वयावगाहिनी(अपेक्षाबुद्धिः)। द्वितीये द्वित्वोत्पत्तिः। तृतीये द्वित्वनिर्विकल्पकम्। चतुर्थे तत्सविकल्पैकापेक्षाबुद्धिनाशौ। अपेक्षाबुद्धिः क्षणत्रयं तिष्ठतीति नियमात् पञ्चमे द्वित्वनाशः। एवं त्रित्वादावपि प्रक्रिया बोध्या।

विशेषणतया परप्रत्ययनिमित्तं ( परत्वम् )।

विशेषणतयाऽपरप्रत्ययनिमित्तम् ( अपरत्वम् )।

अर्थप्रकाशो ( बुद्धिः )।

यस्मिन् सत्यनुरागस्तत् ( सुखम् )।

यस्मिन् सत्यनुद्वेषस्तद् ( दुःखम् )।

प्रार्थना ( इच्छा )

ज्वलनात्मको ( द्वेषः )।

( प्रयत्नः ) उत्साहः।

आद्यपतनासमवायिकारणं ( गुरुत्वम् )।

आद्यस्यन्दनासमवायिकारणं (द्रवत्वम्)।

पृथिवीवृत्त्यवृत्तिरससमानाधिकरणवृत्तिशब्दावृत्ति-गुणत्वसाक्षाद्व्याप्यजातिमान् ( स्नेहः )।

द्रवत्वनिष्ठत्वरहितात्मविशेषगुणनिष्ठत्वरहितपरत्वा-परत्वात्यन्ताभावप्रतियोगिसत्तावान्तरजातिमदसमवा-यिकारणं वा।

द्रवत्वरहितध्वंसान्यत्वविशेषगुणमात्रजनकरहिता-त्यन्तविशेषगुणरहितभावत्वं समवायिकारणं ? वा। संग्रहादिहेतुः।

गगनसमवेतसमवेतत्वरहितमूर्तामूर्तसमवेतसमवे-तवान् ( संस्कारः )।

विहितक्रियया साध्यः पुंगुणः ( धर्मः )।

निषिद्धक्रियया साध्यः पुंगुणः ( अधर्मः )।



गुणत्वे सति श्रोत्रग्राह्यः (शब्दः)॥

॥ इति गुणप्रकरणम् ॥

॥ अथ कर्माणि ॥

संयोगासमवेतसंयोगासमवायिसमवेतवत् ( कर्म ) (तच्च पञ्चविधम् ) उत्क्षेपणादिभेदेन ।

तत्र अधोदेशविभागोर्ध्वदेशसंयोगजनकं कर्म( उत्क्षेपणम् ) ।

ऊर्ध्वदेशविभागाधोदेशसंयोगजनकं कर्म(अपक्षेपणम् ) ।

अग्रदेशविभागमूलदेशसंयोगजनकं कर्म ( आकुञ्चनम् ) ।

मूलदेशविभागाग्रदेशसंयोगजनकं कर्म ( प्रसारणम् ) ।

उत्क्षेपणाकुञ्चनं च प्रयत्नजनिष्ठं न च गमनस्यापि प्रसङ्गादप्रयत्नजं (?) कर्म ( गमनम् ) ।

ननु पञ्चैव कर्माणीति नोपपद्यते। भ्रमणादीनां सत्त्वादिति चेत् ॥ न। भ्रमणादयोऽपि कर्मविशेषा इत्युक्तं शास्त्रकृद्भिः ॥

॥ इति कर्मप्रकरणम् ॥

समवेतत्वरहितसर्वान्योन्याभावसमानाधिकरणसमवेतं ( सामान्यम् ) ।

समवेतत्वरहितसर्वान्योन्याभावसमानाधिकरणरहि-

ताः समवेतरहितसमवेता ( विशेषाः ) ॥

नित्यः सम्बन्धः ( समवायः ) ।

समवेतत्वरहितसर्वान्योन्याभावसमानाधिकरणाभावो वा ।

॥ अथाभावपदार्थः ॥

नञर्थविषयप्रत्ययविशेषः ( अभावः ) ।

(स च चतुर्धा) भिद्यते, प्रागभावः प्रध्वंसाभावोऽत्यन्ताभावोऽन्योन्याभावश्चेति ।

उत्तरैकावधिरभावः (प्रागभावः) ।

पूर्वैकावधिरभावः (प्रध्वंसाभावः) ।

तादात्म्यप्रतियोगिकोऽभावः(अन्योन्याभावः) ।

उभयावधिरहितसंसर्गाभावः ( अत्यन्ताभावः ) ॥

॥ इत्यभावप्रकरणम् ॥

तर्काम्बराङ्कप्रमितेष्वतीतेषु शकान्ततः ।<br>
वर्षेषूदयनश्चक्रे सुबोधां लक्षणावलिम् ॥ १ ॥

विद्यासन्ध्योदयोद्रेकादविद्यारजनीक्षये ।<br>
यदुदेति नमस्तस्मै कस्मैचिद्विश्वतस्त्विषे ॥ २ ॥

इति श्रीमदुदयनाचार्यविरचिता लक्षणावलिः समाप्ता ।



---

१ तल्लक्षणं तु सामान्यशून्यत्वे सति सामान्यभिन्नत्वे सति समवेतत्वं, स्वतो व्यावृत्तत्वं वा बोध्यम् ॥ २